मित्रावरुणाभ्यां नमः पङ्क्त्यै नमस्त्रिणवत्रयस्त्रिँशाभ्यो नमश्शाकररैवताभ्यां नमो हेमन्तशिशिराभ्यां नम ऊर्ध्वायै दिशे नम उदानाय नमो विष्णवे नमः ॥५॥ ५

पृथिव्यै नमोऽग्नये नमो भूताय नमश्चक्षुषे नमोऽन्तरिक्षाय नमो वायवे नमो भव्याय नमश्श्रोत्राय नमो दिवे नमस्सूर्याय नमो भविष्यते नमो मनसे नमः ॥६॥ ६

[३०१४]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे नमस्कारवचनं नामैकादशं वचनं संपूर्णम् ॥११॥

अथ द्वादशं वचनम् ।

## अलिवन्दानुवचनम् ।

अलिवन्दाय स्वाहा बलिवन्दाय स्वाहा सर्वस्मै स्वाहा ॥१॥ १

[३०१५]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे अलिवन्दानुवचनं नाम द्वादशं वचनं संपूर्णम् ॥१२॥



अथ त्रयोदशं वचनम् ।

## शादानुवचनम् ।

शादं दद्भिरवकान् दन्तमूलैस्स्तेगान् दँष्ट्राभ्यां मण्डूकाञ्जम्भैरादकां खादेनोर्जँ सँसीदेनारण्यं जाम्बीलेन मृदं बर्स्वैश्शर्कराभिरवकामवक्काभिश्शर्करामुत्सादेन जिह्वामवक्रन्देन तालुँ सरस्वतीं जिह्वाग्रेण ॥१॥ १

वाजँ हनुभ्यामप आस्येनादित्याञ्छ्मश्रुभिरुपयाममधरोष्ठेन सदुत्तरेणान्तरेणानूकाशं प्रकाशं प्रकाशेन बाह्यँ स्तनयित्नुं निर्बाधेन सूर्याग्नी चक्षुर्भ्यां विद्युतं कनीनिकाभ्यामशनिं मस्तिष्केण बलं मज्जभिः ॥२॥ २

कूर्माञ्छफैरच्छराभिः कपिञ्जलान् साम कुष्ठिकाभिर्जवं जङ्घाभिरगदं जानुभ्यां वीर्यं गुहाभ्यां भयं प्रचलाभ्यां गुहोपपक्षाभ्यामश्विना अँसाभ्यामदितिँ शीर्ष्णा निर्ऋतिं निर्जाल्मकशीर्ष्णा ॥३॥ ३

[१] मै. ३,१५,१ (१) । वा. २५,१ । काण्व. २७,१ । तै. सं. ५,७,११ । मा. श्रौ. ९,२,५ ।
[२] मै. ३,१५,१-२ (१-२) । वा. २५,१-२ । काण्व. २७,१-३ । तै. सं. ५,७,१२ ।
[३] मै. ३,१५,३ (३) । वा. २५,३ । काण्व. २७,५-६ । तै. सं. ५,७,१३ ।

योक्त्रं गृध्राभिर्युगमानतेन चित्तं मन्याभिस्संघोषान् प्राणैः प्रकाशेन त्वचं पराकाशेनान्तरां मशकान् केशैरिन्द्रँ स्वपसा वहेन बृहस्पतिँ शकुनिसादेन रथमुष्णिहाभिः ॥४॥ ४

मित्रावरुणौ श्रोणिभ्यामिन्द्राग्नी शिखण्डाभ्यामिन्द्राबृहस्पती ऊरुभ्यामिन्द्राविष्णू अष्ठीवद्भ्याँ सवितारं पुच्छेन गन्धर्वाञ्छेपेनाप्सरसो मुष्काभ्यां पवमानं पायुना पवित्रं पोत्राभ्यामाक्रमणँ स्थूराभ्यां प्रतिक्रमणं गृष्ठाभ्याम् ॥५॥ ५

इन्द्रस्य क्रोडोऽदित्यै पाजस्यं दिशां जत्रवो जीमूतान् हृदयौपशाभ्यामन्तरिक्षं पुलितता नभ उदर्येणेन्द्राणीं प्लीह्ना वल्मीकान् क्लोम्ना गिरीन् प्लाशिभिस्समुद्रमुदरेण वैश्वानरं भस्मना ॥६॥ ६

पूष्णो वनिष्ठुरान्धाहेस्स्थूरगुदा सर्पान् गुदाभिर्ऋतून् पृष्टिभिर्दिवं पृष्ठेन वसूनां प्रथमा कीकसा रुद्राणां द्वितीयादित्यानां तृतीयाङ्गिरसां चतुर्थी साध्यानां पञ्चमी विश्वेषां देवानाँ षष्ठी ॥७॥ ७

ओजो ग्रीवाभिर्निर्ऋतिमस्थभिरिन्द्रँ स्वपसा वहेन रुद्रस्य विचलस्स्कन्धोऽहोरात्रयोर्द्वितीयोऽर्धमासानां तृतीयो मासश्चतुर्थ ऋतूनां पञ्चमस्संवत्सरस्य षष्ठः ॥८॥ ८

आनन्दनन्दथुभ्यां कामं प्रत्यासाभ्यां भयँ शितीमद्भ्यां प्रशिषं प्रशासाभ्याँ सूर्याचन्द्रमसौ वृक्काभ्याँ श्यामशबलौ मतस्नाभ्यां व्युष्टिं रूपेण निम्रुक्तिमरूपेण ॥९॥ ९

अहर्माँसेन रात्रीं पीवसापो यूषेण घृतं रसेन श्यां वसया दूषीकाभिर्ह्रदुनिमश्रुभिः प्रुष्वां दिवं रूपेण नक्षत्राणि प्रतिरूपेण पृथिवीं चर्मणा कवीं छव्योपाकृताय स्वाहालब्धाय स्वाहा हुताय स्वाहा ॥१०॥ १०

अग्नेः पक्षतिस्सरस्वत्या निपक्षतिस्सोमस्य तृतीयापां चतुर्थ्योषधीनां पञ्चमी रुद्रस्य षष्ठी मरुताँ सप्तमी बृहस्पतेरष्टमी मित्रस्य नवमी वरुणस्य दशमीन्द्रस्यैकादशी विश्वेषां देवानां द्वादशी द्यावापृथिव्योः पार्श्वं यमस्य पाटोरः ॥११॥ ११

वायोः पक्षतिस्सरस्वतो निपक्षतिश्चन्द्रमसस्तृतीया नक्षत्राणां चतुर्थी सवितुः पञ्चमी संवत्सरस्य

---

[४] मै. ३,१५,३ (३) । वा. २५,३ । काण्व. २७,५ । तै. सं. ५,७,१४ ।
[५] मै. ३,१५,६ (६) । वा २५,६ । काण्व. २७,९ । तै सं. ५,७,१५ ।
[६] मै. ३,१५,७ (७) । वा. २५,८ । काण्व. २७,११-१२ । तै. सं. ५,७,१६ ।
[७] मै. ३,१५,९ (९) । वा. २५,७ । काण्व. २७,१० । तै. सं. ५,७,१७ ।
[८] तै. सं. ५,७,१८ । [९] तै. सं. ५,७,१९ । [१०] तै. सं. ५,७,२० ।
[११] मै. ३,१५,४ (४) । वा. २५,४ । काण्व. २७,७ । तै. सं. ५,७,२१ ।
[१२] मै. ३,१५,५ (५) । वा. २५,५ । काण्व. २७,८ । तै. सं. ५,७,२२ ।

षष्ठी सर्पाणाँ सप्तम्यर्यम्णोऽष्टमी धातुर्नवमी त्वष्टुर्दशमीन्द्राण्या एकादश्यदित्या द्वादशी द्यावा-पृथिव्योः पार्श्वं यम्याः पाटोरः ॥१२॥ १२

पन्थामनुवृग्भ्याँ संततिँ स्नावन्याभ्याँ शुकान् पित्तेन हरिमाणं यक्ना हलिक्ष्णान् पापवातेन कूश्माञ्छकभिश्शवर्तानूवध्येन शुनो विशसनेन सर्पाँल्लोहितगन्धेनं वयाँसि पक्वगन्धेन पिपीलिकाः प्रशादेन ॥१३॥ १३

[३०२८]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे शादानुवचनं नाम त्रयोदशं वचनं संपूर्णम् ॥१३॥

॥ इत्येकोत्तरशताध्वर्युशाखाप्रभेदभिन्ने श्रीयजुषि काठके चरकशाखायामश्वमेधो नाम पञ्चमो ग्रन्थः संपूर्णः ॥५॥

॥ संपूर्णा च चरकशाखा ॥

इति काठक-संहिता समाप्ता ।

---

[१३] तै. सं. ५,७,२३ ।

# काठक-संहिता-मन्त्राणां

# वर्णानुक्रम-सूची ।



*

*

# काठक-संहितान्तर्गत—
# अश्वमेध-वचन-मन्त्राणां सूची ।

*

# काठक-संहिताया विषयानुक्रमणिका।

## (१) इठिमिका।

[१-१८ स्थानकानि।]



## (२) मध्यमिका।

[१९-२० स्थानकानि।]

## (३) ओरिमिका।×

[३१-४० स्थानकानि।]



× अस्मिन्नेव तृतीये ग्रन्थे 'याजानुवाक्या' नाम चतुर्थो ग्रन्थोऽन्तर्भूत एव।

# अश्वमेधाद्यनुवचनानि ।×

[ १-१३ अनुवचनानि । ]

| वचन | विषयः | पृष्ठानि |
|---|---|---|
| १ प्रथमं | पन्थानुवचनम् । | ४११-१४ |
| २ द्वितीयं | गणानुवचनम् । | ४१४-१५ |
| ३ तृतीयं | अनुवचनम् । | ४१६-१८ |
| ४ चतुर्थं | मेषानुवचनम् । | ४१८-२२ |
| ५ पञ्चमं | मितानुवचनम् । | ४२२-२६ |
| ६ षष्ठं | जीमूतानुवचनम् । | ४२६-३२ |
| ७ सप्तमं | इन्द्रानुवचनम् । | ४३२-३३ |
| ८ अष्टमं | पेत्वानुवचनम् । | ४३४ |
| ९ नवमं | रोहितानुवचनम् । | ४३४-३५ |
| १० दशमं | सोमानुवचनम् । | ४३६-३७ |
| ११ एकादशं | नमस्कारवचनम् । | ४३७-३८ |
| १२ द्वादशं | अलिवन्दानुवचनम् । | ४३८ |
| १३ त्रयोदशं | शादानुवचनम् । | ४३८-४० |